**त्वादिति** ॥ सर्ववेदानां विष्णुपरत्ववर्णनं वेदविहितधर्माचरणं निषिद्धधर्मत्यागश्च योगस्तद्विरोधीत्यर्थः । क्षीणे पुण्ये मर्त्यलोकं विशन्ति इति वचनेन बन्धकत्वावगमान्मोक्षोपायविरोधित्वमिति द्रष्टव्यम् । धर्ममूलम् इत्यत्र धर्मोत्पादकमित्यन्यथाप्रतीतिनिरासायाऽह– **धर्मज्ञप्तेरिति** ॥ **मनोगतिरिति** ॥ धर्मस्वरूपचित्रत्वाद् यो यो देवमनोगतः । स एव धर्मो विज्ञेयो नह्येते लोकसम्मिताः, प्रायः सतां न मनः पापमार्गे गच्छेत् इत्यादिवचनादिति भावः । देहयात्राद्यर्थं सद्भिरनुष्ठितस्य लशुनभक्षणादेर्धर्मत्वाभावाद् धर्मबुद्ध्येत्युक्तम् ॥ **विकल्पविषय इति** ॥ युगपदनुष्ठानाद्ययोग्यधर्मयोर्मध्ये यत्र स्वमनसो रुचिस्तदेव कार्यमिति मनसो रुचिरेव धर्ममूलमित्यर्थः । ननु वेदविहितस्य वेदपरमसिद्धान्तत्वे प्रवृत्तधर्मस्यापि वेदपक्षत्वं प्राप्तमत आह– **धर्म इति** ॥ ४५ ॥

## भावप्रकाशः

**कथमेतदनेनेति** ॥ त्रैगुण्यविषया इति विषयशब्दान्तबहुव्रीहिणा तद्विषयकत्वमात्रलाभेप्यापाततः प्रतिपादनं कथं लभ्यत इत्यर्थः । अभिधाने विषयकृत्वमित्यनेन विषयीकारित्वार्थकविषयशब्दान्तबहुव्रीहिः ग्राह्या । तथा च वादः विषयशब्दान्तबहुव्रीहिश्चेत्याभ्यामापाततः प्रतिपादनमुच्यत इत्यर्थः । **उत्तानार्थ इति** ॥ काम्यकर्माद्यापातार्थ इत्यर्थः । धर्मकारणत्वाभावादाह– **धर्मज्ञप्तेरिति** ॥ ननु शुचौ तु चरिते शीलमित्यमरोक्तेराचार इत्यनेन पुनरुक्तिरित्यत आह– **शीलं मनोगतिरिति** ॥ शीलसमाधान इत्यस्माद्भावे घञर्थे कविधानम् । अर्धर्चादित्वात् क्लीबत्वम् । समाधानं च मनोवृत्तिविशेष इत्युक्तार्थलाभ इति भावः । लौकिकव्यापारव्यावृत्त्यर्थमुक्तम्– **धर्मबुद्ध्येति** ॥ निषिद्धविषये रुचिव्यावृत्त्यर्थमुक्तम् । **विकल्पविषय इति** ॥ युगपदनुष्ठानायोग्यकर्मद्वयविषय इत्यर्थः । ननु वेदविहितस्य धर्मत्वे काम्यधर्मस्य धर्मत्वं न स्यात् वेदनिषिद्धत्वादित्यत आह– **धर्मशब्दोऽत्रेति** ॥ ४५ ॥

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

**भाष्यम्– तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह– यावानर्थ इति ॥ यावानर्थः प्रयोजनम् उदपाने कूपे भवति तावान् सर्वतः संप्लुतोदके अन्तर्भवत्येवैवं सर्वेषु वेदेषु यत् फलं तद् विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति ॥**

श्लोकः ४६

## भावप्रदीपिका

ननु कामात्मनां समाध्यभावेन मोक्षाभावेऽपि न कर्मपरित्यागेन ज्ञानसेवनं वरम् । ज्ञानिनामपि कर्मफलाभावेन मार्गद्वयस्य साम्यादित्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **तथापीति** ।। **सर्वेषु वेदेषु इति** तदुक्तकाम्यकर्मसु ।।

## भावप्रकाशिका

ननु यद्यपि त्रिगुणसम्बन्धिस्वर्गादौ भ्रमतां काम्यकर्मिणां ज्ञानाभावेन तत्फलस्य मुक्तेरभावात्, न कामना कार्येत्युच्यते । तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्याशङ्कापरिहारत्वेनोत्तरश्लोकमवतारयति– **तथाऽपीति** ।। सर्वेषु वेदेष्विति । सर्ववेदोक्तकाम्यकर्मस्वित्यर्थः ।।

## प्रमेयदीपिका

योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोगः? इत्यत आह– **तथापीति** ।। 'यामिमाम्' (२.४३) इत्यत्र **काम्यकर्मिणां** निन्दा कृता । 'निस्त्रैगुण्यो भव'(२.४५) इति च तत्त्यागो विहितः । तत्र प्रष्टव्यं किन्निमित्तमेतदिति? ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवतीति । अत्रेदमुच्यते । यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति । तथाऽपि तन्निन्दादिकं नोपपद्यते । कुतः(यतः) काम्यकर्मिणां फलं स्वर्गादिकं ज्ञानिनां न भवतीति ज्ञानकर्ममार्गयोः साम्यमेवेति योगानुष्ठाननियमाक्षेपे सत्याहेत्यर्थः ।।

केचिदस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमाहुः । अपरे तु यत्कर्मसमुच्चित्तं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगन्तव्यः । न तु समस्तवेदाभ्यासेनायुः समापनीयमिति । अत्र तन्निरासाय व्याचष्टे– **यथेति** ।। सामर्थ्यात् यथैवंशब्दयोरध्याहारः । 'यावान्' 'तावान्' इत्येतयोरावृत्तिश्च ।। **सर्वेषु वेदेष्विति** ।। तदुक्तकाम्यकर्मिणामित्यर्थः ।।

## भावबोधः

**आवृत्तिश्चेति** ।। पूर्वार्धे तावनिति, उत्तरार्धे यावानिति ग्राह्यमित्यर्थः । अत एव गीतायाम् एकैकत्रैकैकमुक्तमिति भावः ।।

श्लोकः ४६

## भावदीपः

**किं निमित्तमेतदिति** ॥ निन्दाकरणं त्यागविधानं चेत्येतदुभयमित्यर्थः ॥ **इत्यत्रेति** ॥ 'तात्पर्यमाहुः' इत्यनुषङ्गः । **सामर्थ्यादिति** ॥ अन्वययोग्यताबलादित्यर्थः । अन्यथा अनन्वयापत्तेरित्यर्थः ॥

## भावरत्नकोशः

विजानत इति श्रवणादाह– **ज्ञानेति** ॥ एतत् काम्यकर्मनिन्दनम्, काम्यत्यागविधानं च । उक्तम् – 'समाधौ न विधीयते' इत्येतद्भाष्ये । तन्निष्कृष्य दर्शयति– **काम्यकर्मिणामिति** ॥ तथाऽपीत्येतत् सत्प्रतियोगिकमिति तदाह– **यद्यपीति** ॥ ज्ञानफलं मोक्षः । निन्दादीत्यादिपदेन काम्यत्यागविधानं ग्राह्यम् । तथाऽपीत्यनन्तरं साध्यमध्याहृत्य तत्र हेतुसमर्पकं भाष्यं साध्याहारं योजयति– **यत इति** ॥ **आक्षेपे** न नियमेन योगोऽनुष्ठातव्यः सर्वफलानापादकत्वादित्याक्षेप इत्यर्थः । अध्याहाराभावे पूर्वार्धपादद्वयार्थस्य मिथो विप्रतिषेधः, उत्तरार्धस्य प्रकृतार्थासङ्गतिश्च स्यात् । न हि कूपादेः सर्वतः सम्प्लुतोदकत्वम् । न वा तटाकादौ भवत्स्नानपानादिव्यवहारो वेदेषु भवतीत्यतोऽध्याहारेण वाक्यार्थो वर्णनीय इति भावः । **आवृत्तिश्चेति** ॥ अत एव भाष्ये 'फलम्' इति फलशब्दश्चार्थशब्दार्थप्रयोजनार्थः । तावच्छब्दश्च यावच्छब्दाध्याहारसापेक्षः । यावान् सर्वेषु वेदेष्वर्थः तावान् ज्ञानिनो भवतीति गीताक्षरार्थो योजनीय इति नोक्तदोष इति भावः । सर्वेषु वेदेषु ज्ञानिनो यत् फलं तत् फलं ज्ञानिनः फलेऽन्तर्भवतीत्युक्तिरयुक्तेत्यत आह– **तदुक्तकाम्यकर्मिणामिति** ॥

## भावदीपिका

॥ **यत्कर्मेति** ॥ यावत्कर्मेर्थः । ननु गीतायां यथैवंशब्दयोरभावात् कथं यथा यावान्, एवं सर्वेषु इति भाष्ये कथं च पूर्वार्धे द्वितीयपादे तावानिति उत्तरत्र यावानिति भाष्यत इत्यत आह– **सामर्थ्यादिति** ॥ अर्थाबाधरूपयोग्यताप्राप्तेरित्यर्थः ॥ **आवृत्तिश्चेति** ॥ पूर्वार्धे द्वितीयपादे तावानिति उत्तरार्धे आद्यपादे च यावानिति ग्राह्यम् । अध्याहारावृत्त्योरभावेऽसङ्गतिः स्यादिति भावः ॥

श्लोकः ४६

## भावप्रकाशः

**सामर्थ्यादिति** ।। अर्थाबाधरूपसामर्थ्यादित्यर्थः ।।

**भाष्यम्– ब्रह्म अणतीति ब्राह्मणोऽपरोक्षज्ञानी । स हि ब्रह्म गच्छति । 'विजानतः' इति ज्ञानफलत्वं तस्य दर्शयति ।। ४६ ।।**

## भावप्रदीपिका

क्षत्रियादिव्यावृत्त्यर्थं न ब्राह्मणपदमित्याह– **ब्रह्मेति** ।। तर्हि 'विजानतः' इति पुनरुक्तिरित्यत आह– **विजानत इति** ।। अस्य अपरोक्षज्ञानस्य परोक्षज्ञानफलत्वम् ।। ४६ ।।

## भावप्रकाशिका

ज्ञानिक्षत्रियव्यावृत्तिर्मा भूदित्याह– **ब्रह्माणतीति** ।। तर्हि ब्राह्मणपदेनालं किमुत्तरपदेन? इत्यत आह– **विजानत इतीति** ।। परोक्षज्ञानफलत्वमपरोक्षज्ञानस्येत्यर्थः ।। ४६ ।।

## प्रमेयदीपिका

'ब्राह्मणस्य' इति न क्षत्रियादिव्यावृत्तिः शङ्क्येति भावेनाऽह– **ब्रह्मेति** ।। वर्णविपर्ययो निरुक्तत्वात् । एवं तर्हि ब्राह्मणशब्दो मुक्तवाची इति स्यात् । न च मुक्तस्य फलमस्तीत्यत आह– **अपरोक्षेति** ।। तदुपपादयति– **स हीति** ।। तर्हि 'विजानतः' इति पुनरुक्तिरिति चेत् न । तस्य परोक्षज्ञानिवाचित्वात् । उभयग्रहणमनुपपन्नमित्यत आह– **विजानत इति** ।। तस्य अपरोक्षज्ञानस्य परोक्षज्ञानफलत्वम् । एतच्च स्वरूपकथनम् ।।

यद्यपि ज्ञानिनः कर्मिणश्चान्योन्यफलाभावः । तथाऽपि ज्ञानिनः फलं महासमुद्रोदकमिव महत् । कर्मिफलं तु कूपोदकमिवात्यन्ताल्पम्। अतः कुतस्तयोः साम्यम्? तथा चाल्पास्थिरफलकर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं युक्तमेवेति भावः ।।

## भावबोधः

ननु ब्रह्माणतीति निर्वचने ब्रह्माण इति भवेदित्यत आह– **वर्णेति** ।। दीर्घरूपेत्यर्थः ।।

**उभयग्रहणमिति** ।। 'ज्ञानादेव स्वर्ग' इति श्रुत्या अपरोक्षज्ञानस्य यथा स्वर्गफलकत्वं, यथा वा मोक्षाख्यमहाफलत्वं, तथा न परोक्षज्ञानस्येति उभयोः समकक्ष्यतया ग्रहणमनुपपन्नमित्यर्थः ।।

## भावदीपः

**वर्णविपर्ययः** दीर्घव्यत्यासः ।। **उभयग्रहणमनुपपन्नमिति** ।। परोक्षापरोक्षयोर्द्वयोरपि समकक्ष्यतया साक्षान्महाफलहेतुत्वायोगादिति भावः । 'ज्ञानकर्ममार्गयोः साम्यमेव' इति कृतचोद्यस्य 'यावान्' इत्यनेनोक्तं परिहारं व्यनक्ति– **यद्यपि ज्ञानिन इत्यादिना** ।।

## वाक्यार्थप्रदीपः

ननु ब्रह्माणतीति निर्वचने ब्रह्माण इति भवेत् । ब्राह्मण इति तु कथमित्यत आह– **वर्णव्यत्यय इति** ।। दीर्घव्यत्यय इत्यर्थः । **निरुक्तत्वादिति** ।। पृषोदरादीनि यथोपदिष्टमिति वचनादिति भावः ।।

## भावरत्नकोशः

'ब्रह्म अणतीति ब्राह्मणः' इति भाषणमयुक्तम् । 'अकः सवर्णे दीर्घः' इति ब्रह्माण इति प्राप्त्या ब्राह्मण इति निर्देशायोगादित्यत आह– **वर्णविपर्यय इति** ।। दीर्घव्यत्यास इत्यर्थः । अलाक्षणिकत्वं व्युदस्यति– **निरुक्तत्वादिति** ।।

'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'

इति वैयाकरणवचनादित्यर्थः । **एवं तर्हि** ब्रह्माणतीति निर्वचने । **फलमस्तीति** ।। अवाप्तकामत्वादिति भावः । **गच्छति** अवगच्छति अपरोक्षयतीति भाष्यार्थः । **तस्य** विजानत इति पदस्य । **उभयग्रहणमिति** ।। अपरोक्षज्ञानस्य मोक्षफलकत्वं न परोक्षज्ञानस्येति तयोरुभयोरपि समकक्ष्यतया ग्रहणमनुपपन्नमित्यर्थः । तस्येत्यनूद्यार्थमाह– **अपरोक्षज्ञानस्येति** ।। योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोग इति कृतचोद्यं परिहरति– **एतच्चेति** ।। अपरोक्षज्ञानस्य परोक्षसाध्यत्ववर्णनं, अन्तर्भावितसर्वफलकत्ववर्णनं चेत्यर्थः । तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेति शङ्कामनूद्य भाष्यभावं वदन् परिहरति **यद्यपीत्यादिना** ।।

श्लोकः ४६

**गीताक्षरार्थस्तु**– 'यामिमाम्' इत्यत्र काम्यकर्मिणां निन्दा कृता । 'निस्त्रैगुण्यो भव' इति च तत्त्यागो विहितः । तत्र प्रष्टव्यं किन्निमित्तमेतदिति ॥ ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवतीति ॥ अत्रेदमुच्यते । यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति, तथाऽपि तन्निन्दादिकं नोपपद्यते । यतः काम्यकर्मिणां फलं स्वर्गादिकं ज्ञानिनां न भवतीति ज्ञानकर्ममार्गयोः साम्यमेवेति योगो न नियमेनानुष्ठातव्य इत्याक्षेपे सत्युच्यते– **यावानर्थ इति** ॥ उदकं पीयतेऽस्मिन्नित्युदपानं कूपादि । तस्मिन् यावानर्थः स्नानादिरूपं प्रयोजनं यथा भवति तावानर्थः सर्वतः सम्प्लुतोदके समुद्रेऽन्तर्भवति । एवं सर्वेषु वेदेषु सर्ववेदोक्तकाम्यकर्मिणामिति यावत् । यावानर्थः स्वर्गादिरूपं फलं तावानर्थो विजानतः परोक्षज्ञानिनो ब्राह्मणस्य ब्रह्मा-परोक्षज्ञानिनो भवत्येव । तस्य मोक्षफले महानन्दरूपे क्षुद्रानन्दरूपफलमन्तर्भवति । अत्र 'विजानतः' इति पदोक्तपरोक्षज्ञानस्यापरोक्षज्ञानं प्रति साधनत्ववर्णनं स्वरूपकथनमिति ॥४६॥

## भावदीपिका

॥ **शङ्क्येति** ॥ विशेषोक्तिः शेषनिषेधं गमयति इति न्यायादिति भावः । ननु ब्रह्म अणतीति निर्वचने सवर्णदीर्घे ब्रह्माण इति स्यादित्यत आह– **वर्णविपर्यय इति** ॥ ब्रह्मेत्युत्तरत्र स्थितो दीर्घः पूर्वाक्षरस्य ब्रकारस्य परो द्रष्टव्यः । तथाच ब्राह्मण इति भवतीति ध्येयम् । किमत्र नियामकमित्यत आह– **निरुक्तत्वादिति** ॥

वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ इति ।

भवेद् वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥

इत्याद्युदाहरणानि च द्रष्टव्यानि ॥ **एवं तर्हीति** ॥ अण पण गतौ । गतिश्च प्राप्तिः । तथा च ब्राह्मणो ब्रह्मप्राप्त इत्याशयेनेयं शङ्केति ध्येयम् ॥ **स हीतीति** ॥ तथाचात्र ब्रह्मप्राप्तो न विवक्षितः । किन्तु ब्रह्मप्राप्तियोग्यः । तादृशश्चापरोक्षज्ञान्येवेति भावः । अपरे तु प्राप्त्यभिप्रायेण शङ्का, गत्यर्थानां ज्ञानार्थत्वमभिप्रेत्य परिहारः । तदर्थं च गच्छतीत्यस्यावगच्छतीत्यर्थो द्रष्टव्य इत्याहुः ॥ **अनुपपन्नमिति** ॥ ज्ञानादेव स्वर्ग इति श्रुत्याऽपरोक्षज्ञानस्य यथा सर्वफलकत्वं यथा

वा मोक्षाख्यमहाफलकत्वं तथा न परोक्षज्ञानस्येत्युभयोः समकक्ष्यतया ग्रहणमनुपपन्नमित्यर्थः । नन्वपरोक्षज्ञानस्य परोक्षज्ञानफलत्वं प्रसिद्धमेवेतीह कस्माद् वक्तव्यमित्यत आह– **एतच्चेति** ॥ नन्वनेन तथाऽपीत्यादिना कृता साम्यशङ्का कथं परिहृतेत्यत आह– **यद्यपीत्यादिना** ॥ **अन्योन्येति** ॥ ज्ञानिफलं न कर्मिणः । कर्मिफलं च न ज्ञानिन इत्यन्योन्येत्यर्थः ॥

## भावप्रकाशः

ननु ब्रह्म अणतीति निर्वचने ब्रह्माण इति स्यात् । अकः सवर्णेदीर्घ इति स्मृतेरित्यत आह– **वर्णविपर्यय इति** ॥ दीर्घविपर्यय इत्यर्थः । **निरुक्तत्वादिति** ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगः तदुच्यते पञ्चविधं निरुक्तम्

इत्युक्तेरिति भावः । **न च मुक्तस्येति** ॥ मुक्तस्य मुक्त्यतिरिक्तफलकत्वात् तदतिरिक्त-फलकत्वं चास्ति ज्ञानादेव स्वर्ग इत्यादि श्रुतेः । तच्च न परोक्षज्ञानस्येति तयोः समकक्षतया ग्रहणमनुपपन्नमित्यर्थः ॥

## प्रमेयदीपिका

अपव्याख्यानं तूक्तवक्ष्यमाणन्यायनिरस्तम् ॥ ४६ ॥

## भावबोधः

**उक्तवक्ष्यमाणन्यायनिरस्तमिति** ॥ ज्ञानिनः कर्ममात्रत्याग इत्याद्यपव्याख्यानं गीतायामेव ज्ञानिनमर्जुनं प्रत्येव 'तस्माद्युध्यस्व' इत्याद्युक्तन्यायेन, 'कर्मण्येवाधिकारः' इत्यादिवक्ष्यमाण-न्यायेन च निरस्तम् । द्वितीये व्याख्याने तु मोक्षस्य समुच्चयसाध्यत्वांशः, 'स हि धर्मस्सुपर्याप्त' सत्याद्युक्तन्यायेन, 'अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गत' इत्यादिवक्ष्यमाणन्यायेन च भाष्ये निरस्तः । कर्मसङ्कोचांशस्तु 'एतान्यपि तु कर्माणि' इत्यादिवक्ष्यमाणन्यायेन गीतायामेव निरस्त इत्यर्थः ।

श्लोकः ४६

## भावदीपः

**अपव्याख्यानं त्विति** ।। 'केचित्' इत्यादिना उक्तमिति भावः । तत्राद्यम् 'अथ चेत्त्वमिमं धर्म्यम्' (२.३३) इत्यादिना 'ततो युद्धाय युज्यस्व' (२.३८) इत्यन्तेनोक्तयुद्धकर्मप्रेरणा-रूपन्यायेन 'कर्मण्येवाधिकारस्ते' (२.४७) इत्यादि वक्ष्यमाणन्यायेन; द्वितीयं 'त्रैगुण्यविषया:' (२.४५) इत्येतद्भाष्ये सर्वस्य ब्रह्मपरत्वोक्तन्यायेन; तथा 'स हि धर्मः सुपर्याप्तः' इति समुच्चय-निरासकभाष्योक्तन्यायेन 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानि' इत्यष्टा-दशोऽध्याये वक्ष्यमाणन्यायेन निरस्तमित्यर्थः ।। ४६ ।।

## भावरत्नकोशः

**अपव्याख्यानमिति** ।। ज्ञानिनः कर्ममात्रत्यागतात्पर्यकत्वव्याख्यानम्, मोक्षहेतुकर्म-समुच्चितवेदभागो ज्ञातव्यो नापर इति व्याख्यानं चेत्यर्थः । **उक्तवक्ष्यमाणेति** ।। तत्राऽद्यं ज्ञानिनमेवार्जुनं प्रति 'तस्माद् युद्ध्यस्व भारत' इत्युक्तेन विष्णुद्वेषिनिग्रहरूपयुद्धप्रेरणन्यायेन 'कर्मण्येवाधिकारस्ते', 'कार्यं कर्म समाचर', नियतं कुरु कर्म त्वम्' इत्यादिवक्ष्यमाणन्यायेन च निरस्तम् । द्वितीयेऽपि लिङ्गभङ्गरूपमोक्षस्य ज्ञानकर्मसमुच्चयसाध्यत्वांशः 'स हि धर्मः सुपर्याप्तः' इति समुच्चयनिरासकभाष्योक्तन्यायेन 'अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते' इति वक्ष्यमाणन्यायेन च निरस्तः । कर्मसङ्कोचांशस्तु 'एतान्यपि तु कर्माणि सङ्गं त्यक्तवा' इत्यादिवक्ष्यमाणन्यायेन निरस्त इत्यर्थः ।।

## भावदीपिका

**अपव्याख्यानं तूक्तवक्ष्यमाणन्यायेति** ।। ज्ञानिनः कर्ममात्रत्यागोऽत्र श्लोके प्रतिपाद्यत इति व्याख्यानं गीतायामेव ज्ञानिनमर्जुनं प्रत्येव 'तस्माद् युद्ध्यस्व' इत्याद्युक्तन्यायेन कर्मण्ये-वाधिकारस्ते, 'तस्मात् कर्म समाचर' इत्यादिवक्ष्यमाणन्यायेन च निरस्तम् । द्वितीयाप-व्याख्याने तु लिङ्गभङ्गरूपमोक्षस्य समुच्चयसाध्यत्वांशः स हि धर्मः सुपर्याप्त इत्युक्तन्यायेन अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते इति वक्ष्यमाणन्यायेन च भाष्ये निरस्तः । कर्म-सङ्कोचांशस्तु एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च, कर्तव्यानीति मे पार्थ इत्यादि-वक्ष्यमाणन्यायेन गीतायामेव निरस्त इत्यर्थः ।। ४६ ।।

## भावप्रकाशः

**उक्तवक्ष्यमाणेति** ॥ ज्ञानिनः कर्ममात्रत्याग इति व्याख्यानं ज्ञानिनमर्जुनं प्रत्येव तस्माद्युद्ध्यस्वेत्याद्युक्तन्यायेन कर्मण्येवाधिकार इत्यादिवक्ष्यमाणन्यायेन च निरस्तम् । कर्मसङ्कोचांशस्तु एतान्यपि तु कर्मणीत्यादिवक्ष्यमाणन्यायेन गीतायामेव निरस्त इत्यर्थः ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

**भाष्यम्– कामात्मनां निन्दा कृता । कथम्? एषां 'स्वर्गकामो यजेत' इत्यादौ कामस्यापि विहितत्वादित्यत आह– कर्मण्येवेति ॥**

## भावप्रदीपिका

ननु 'उपनीतोऽधीयीत' इतिवत् 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामस्यापि विहितत्वात् कथमेषां विहितमाचरतां काममनस्कानामविपश्चित इति निन्दा कृता? इत्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे– **कामात्मनामिति** ॥

## भावप्रकाशिका

.....................निन्दा कृता । इतरफलकामे सति ईश्वरमनःसमाधानाभावेन **अमुक्तिप्रसङ्गादिति** ॥ तत्र । 'स्वर्गकामो यजेत' इत्यादौ यागवत् कामस्यापि विहितत्वाद्विहितमनुतिष्ठता मुक्त्यभावोऽपि गुण एव स्यात् । किं तया सुखादिहान्या? इति भावेनाशङ्क्य, तत्परिहारायोत्तरश्लोकमवतार्य व्याचष्टे– **कामात्मनामिति** ॥

## प्रमेयदीपिका

'ज्ञानिनां कर्माभावमुक्त्वा इदानीमज्ञानिनः कर्मोच्यते' इत्यन्यथाव्याख्याननिरासायाऽह– **कामात्मनामिति** ॥ एषां कर्मिणाम् । सकामतया कर्मकुर्वतां या निन्दा कृता 'यामिमाम्' (२.४२) इत्यादिना सा न युक्तेत्यर्थः । कुतः? 'स्वर्गकामो यजेत' इत्यादौ यजनवत् स्वर्गकामस्यापि विहितत्वात् । न हि विहितं कुर्वतां निन्द्यत्वम् । तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गादिति वदन् विशिष्टविधित्वं मन्यते पूर्वपक्षी ॥

श्लोकः ४७

## भावदीपः

ननु यागकर्मयोर्द्वयोरपि विधौ वाक्यभेद इत्यत आह– **विशिष्टविधित्वमिति** ॥ स्वर्गकामविशिष्टो यागः कार्य इति विशिष्टविधित्वमित्यर्थः ॥

## भावरत्नकोशः

कथमित्याक्षेपार्थः **सा नेति** ॥ कामस्यापीत्यपिपदेन यजनस्यापि ग्रहणे कामस्य यजनस्य च विधौ वाक्यभेद इत्यत उक्तम्– **विशिष्टेति** ॥ स्वर्गकामविशिष्टो यागः कार्य इति विशिष्टविधित्वमित्यभिमान इत्यर्थः । 'वायव्यं श्वेतमालभेत' इत्यादौ विशिष्टविधिदर्शनादिति हृदयम् ॥

## भावदीपिका

ननु यजेत इति यजनस्यैव विवक्षितत्वात् स्वर्गकामस्यापि कथं विहितत्वं वदतीत्यत उक्तम्– **विशिष्टेति** ॥ सोमेन यजेत इत्यादिवत् स्वर्गकामविशिष्टं यजनं कर्तव्यमिति विधीयत इत्याशयः ॥

**भाष्यम्– 'ते' इत्युपलक्षणार्थम् । तत्र ज्ञानिनोऽपि न फलकामकर्तव्यता किम्वन्येषाम् । नत्वस्ति केषाञ्चित्, न तेऽस्तीति ॥**

## भावप्रदीपिका

'ते' इति विशेषणादन्येषां कामेऽधिकारोऽस्तीति भ्रान्तिं निवर्तयति– **त इति** ॥ उपलक्षणप्रयोजनमाह– **तत्र इति** ॥ त इत्युपलक्षणार्थम् इत्यस्य व्यावर्त्यमाह– **न त्विति** ॥ केषाञ्चिदस्ति ते नास्तीति अर्थो न इत्यर्थः ॥

## भावप्रकाशिका

ननु एषां कामात्मनां कथम् 'अविपश्चितः' इत्यादेः निन्दा कृता इत्यनेन सम्बन्धः । ज्ञानिनोऽप्यकाम्यशुभकर्मभिर्मुक्तावानन्दवृद्ध्युक्तेः तस्यापि न फलकामकर्तव्यता किम्वज्ञानिनां ज्ञानाभावेन मुक्तेरेवाभावप्रसङ्गादिति कैमुत्यन्यायेनान्येषामपि फलकामनिषेधोपलक्षणार्थः 'ते'

इतिशब्दः । न केषाञ्चिदस्ति फलकामकर्तव्यता ते नास्तीति विशेषप्रतिषेधनार्थः । नरांश-युक्तेन्द्रत्वेन ज्ञानित्वावगमात् तस्य विशेषप्रतिषेधानुपपत्तेरिति भावः ॥

## प्रमेयदीपिका

'ते' इत्येतदर्जुनमात्रविषयमित्यन्यथाप्रतीतिनिरासायाऽह– **त इति** ॥ सर्ववर्णाश्रमोप-लक्षणमर्थः प्रयोजनमस्येति तथोक्तम् । वक्तर्यायत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यताम्। किं लक्षणया? इत्यत आह– **तवेति** ॥ फलकामः कर्तव्यो यस्य असौ तथोक्तः । तस्य भावस्तत्ता । फलकामस्य कर्तव्यता **तव** कर्तुरिति वा । कृतोऽपि फलकामो न ज्ञानिनोऽत्यन्त-बाधकः । तत्प्रतिबन्धनीयस्य ज्ञानस्याल्पत्वात् । मोक्षस्य च नियतत्वात् । तथाऽपि मोक्ष-विलम्बहेतुत्वात्तस्यापि न कर्तव्यः । **किम्वन्येषाम्** अज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोग इति भावः ॥

ननु 'कर्मण्येवाधिकारो मा फलेषु' इति द्वयमुक्तम् । तत्कथं न फलकामकर्तव्यतेत्येकस्यैव ग्रहणम्? उच्यते । फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात् । 'कर्मण्येवाधिकारः' इति हि तदर्थानुवादः । तथाऽपि न फलकामाधिकार इति वक्तव्यम् । मैवम् । अधिकारभावाभावयोः कर्तव्यत्वाकर्तव्यत्वसमर्थनार्थमुक्तत्वेन साध्यस्यैवोपादानात् । तथा च वक्ष्यति । 'त इत्युप-लक्षणार्थम्' इत्युक्तस्य व्यावर्त्यमाह– **न त्विति** ॥ **केषाश्चित्** फलकामकर्तव्यताऽस्ति, केवलं ते नास्ति इत्यर्थस्तु न इत्यर्थः । 'कामान् यः कामयते' इत्यादौ सर्वेषां निषेधादिति भावः ॥

## भावदीपः

तत्पुरुषमुपेत्याऽह– **फलकामस्येति** ॥ 'तव' इति पदं कर्तृमात्रपरमिति मत्वाऽऽह– **तव कर्तुरिति** ॥ कर्मानुष्ठातुरित्यर्थः । एतावता लाक्षणिकोक्तेः किं प्रयोजनमुक्तं स्यादित्यत आह– **कृतोऽपीति** ॥ **नियतत्वादिति** ॥ 'अनियमः सर्वेषाम्' (ब्र.सू.३.३.३२) इत्युक्तेरिति भावः ॥ इति **वक्तव्यमिति** ॥ 'अधिकारः' इति प्रक्रमात् 'फलेषु' इत्यस्य फलकामोपलक्षकत्वेऽपि फलकामेष्वधिकारो नेति वक्तव्यम् । नत्वकर्तव्यत्वमित्यर्थः ॥ **तथाच वक्ष्यतीति** ॥ अधिकार-भावाभावौ कर्तव्यत्वाकर्तव्यत्वहेतू इत्येतदस्मदुक्तदिशा वक्ष्यति च । 'अतः कर्मण्येवाधिकारः, अतस्तदेव कार्यम्' (गी.भा.) इत्यादिना अनुपदमेवेति भावः ॥ **इत्यादाविति** ॥ 'स कामभिर्जायते तत्र तत्र' इति वाक्यशेषे जन्माख्यक्लेशोक्त्या सर्वेषां कामनिषेधावगमादित्यर्थः ॥

श्लोकः ४७

## भावरत्नकोशः

**कस्योपलक्षणमिति न ज्ञायते** ।। अत आह– **सर्ववर्णेति** ।। लक्षणया सर्ववर्णाश्रम-प्रतिपादकमित्यर्थः । उपलक्षणायेदमिति चतुर्थीसमासोऽपि शक्यो वक्तुम् । ब्राह्मणार्थं पय इति यथा । सत्यम् । प्रकारान्तरमेतत् । भाष्ये 'त इति' इत्यनन्तरं पदमिति शेषः । 'वाक्यं वक्तर्यधीनं हि' इति महाभाष्यप्रयोगात् 'वक्तरि' इति सप्तम्युपपन्ना । **किं लक्षणयेति** ।। लाक्षणिकपदप्रयोगे किं प्रयोजनमित्यर्थः । फलकामे हि कर्तव्यता प्रसक्ता । न च तत्र तव ज्ञानिन इत्यन्वितमित्यतो व्याचष्टे– **फलकाम इति** ।। फलकाम एव कर्तव्यतान्वयमङ्गीकृत्यापि तवेत्येतत् घटयितुं प्रकारान्तरमाह– **फलकामस्येति** ।। तवेत्यनूद्यार्थमाह– **कर्तुरिति** ।। कर्मानुष्ठातुरित्यर्थः । कर्मकर्तुर्ज्ञानिनस्तव फलकामस्य कर्तव्यता नास्ति । किमुक्तं भवति । कर्ममात्रकरणेऽधिकारिणा ज्ञानिना त्वयाऽपि फलकामो न कर्तव्य इति ।।

लाक्षणिकपदप्रयोगे किं प्रयोजनमिति चोद्यपरिहाराय भाष्यभावमाह– **कृतोऽपीति** ।। तत्प्रतिबन्धनीयस्य फलकामप्रतिबन्धनीयस्य । **नियतत्वादिति** ।। 'अनियमः सर्वेषां ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु' इत्यादौ तथा स्थितत्वादिति भावः । **तस्यापि** ज्ञानिनोऽपि । 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठी । **न कर्तव्यः** फलकामः । **तदर्थः** निषेधार्थः । **अनुवादः** कथनम्, अनुकूलो वादो हेतुकथनमिति वा । ननु 'मा फलेषु कदाचन' इत्यत्राधिकार इत्यनुवृत्तेस्तदनुवादपरे भाष्ये न फलकामनाधिकार इत्येव वक्तव्यम् । तत् कथं फलकामकर्तव्यतेति भाषितमिति शङ्कते– **तथाऽपीति** ।। एकस्यैव ग्रहणं कथमिति चोद्य-परिहारेऽपीत्यर्थः । फलकामेति वदन् फलशब्दः फलकामोपलक्षणमित्यभिप्रैति **समर्थनार्थ-मुक्तत्वेनेति** ।। त्वया कर्म कर्तव्यम् । तत्राधिकारित्वात् । फलकामो न कर्तव्यः । तत्रा-नधिकारित्वादिति साधनार्थमुक्तत्वेनेत्यर्थः । **साध्यस्यैव** फलकामो न कर्तव्य इति साध्यस्यैव । तत्कुत इत्यतस्तत्रोपष्टम्भकमाह– **तथा चेति** ।। अतस्तदेव कार्यमित्यत्रेति शेषः । **केषाञ्चित्** अज्ञानाम् ।। **ते** ज्ञानिनस्तव । **निषेधादिति** ।। 'स कामभिर्जायते तत्र तत्र' इति वाक्यशेषे जन्मोपलक्षितक्लेशोक्त्या कामनिन्दनेन सर्वेषां कामनिषेधावगमादित्यर्थः ।।

## भावदीपिका

**किं लक्षणयेति** ।। लक्षणायां किं प्रयोजनमित्यर्थः । फलकामः कर्तव्यो यस्यासौ

फलकामकर्तव्यो ज्ञानी तस्य भावः फलकामकर्तव्यतेति बहुव्रीहिमभिप्रेत्य व्याख्याय प्रकारान्तरेण व्याचष्टे **फलकामस्येति** ॥ तवेत्यनूद्य तस्यार्थमाह– **तत्र कर्तुरिति** ॥ कर्मकर्तुरित्यर्थः । कर्तरीयं षष्ठी । कर्मकर्तुर्ज्ञानिनस्तव फलकामस्य कर्तव्यता नास्ति । कर्ममात्रकरणेऽधिकारिणा ज्ञानिना त्वया फलकामो न कर्तव्य इति यावत् । ननु मोक्ष एव प्रतिबन्धनीय इत्यत आह– **मोक्षस्य चेति नियतत्वादिति** ॥ अपरोक्षज्ञानिनो मोक्षो नियत एव । अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते इति वचनादिति भावः ॥ **मोक्षविलम्बेति** ॥ काम्यकर्मकरणे तत्फलभोगस्याऽवश्यकत्वेन मोक्षविलम्ब इति भावः ॥ **तत् कथमिति** ॥ तथा च गीतानुसारेण भाष्ये ज्ञानिनोऽपि ते न तत्फलकामकर्तव्यता किन्तु कर्मण्येवाधिकार इत्यपि वक्तव्यमित्यर्थः । तर्हि कर्मण्येवाधिकार इत्युक्तिर्गीतायां किमर्थेत्यत आह– **कर्मणीति** ॥ **तदर्थः** फलकामकर्तव्यतानिषेधार्थः । **अनुवादः** कथनमित्यर्थः । त्वया फलकामो न कर्तव्य इत्युक्तौ कुत इत्यपेक्षायां यतस्तव कर्मण्येवाधिकार इति फलकामनिषेधार्थमेव कर्मण्यधिकार उच्यत इत्यप्राधान्यं कर्माधिकारकथनस्येति ज्ञापयितुं तत्रोक्तम् । किन्तु प्राधान्यात् फलकामनानिषेध एवोक्त इति भावः ॥

ननु गीतायां मा फलेषु इत्यत्राधिकार इत्यस्यानुवृत्तेस्तदनुवादपरे भाष्ये न फलकामनाधिकार इत्येव वाच्यम् । कर्तव्यताग्रहणं किमर्थमित्याशङ्कते– **तथाऽपीति** ॥ **साध्यस्यैवेति** ॥ अत्र गीतायां कर्मैव कर्तव्यं फलकामो न कर्तव्य इति कर्तव्यत्वाकर्तव्यत्वरूपं साध्यद्वयमभिप्रेतम् । कुतस्तयोः कर्तव्यत्वाकर्तव्यत्वे? इत्याशङ्कायां तत्र हेतुत्वेन यतस्तव कर्मण्येवाधिकारभावो फलेषु तदभावः इति अधिकारभावाभावौ गीतायां कण्ठतः कथितौ । भाष्ये **न च फलकामकर्तव्यता** इत्यनेन गीताभिप्रेतकर्तव्यत्वरूपं साध्यमेवोक्तमित्यर्थः । अधिकारभावाभावयोरपि को हेतुरित्यत आह– **तथा चेति** ॥ वक्ष्यति अतः कर्मण्येवाधिकार इत्यनेनेर्थः । यद्वा, गीतायां साध्यस्यैवोपादानादित्येतत् कुत इत्यत आह– **तथा चेति** ॥ अतस्तदेव कार्यमित्यनेनेत्यर्थः । **केषाञ्चित्** ज्ञानिनाम् ॥ **केवलं त इति** ॥ ज्ञानिनस्तवैवेत्यर्थः । **निषेधादिति** ॥ स कामभिर्जायते तत्र तत्र इति बन्धकत्वोक्त्या निषिद्धत्वमभिप्रेतमिति ज्ञातव्यम् । नरशब्दार्थस्तु विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्नरः स्मृत इति प्रमाणानुसारेण ज्ञेयः ॥

श्लोकः ४७

## भावप्रकाशः

इत्युपलक्षणार्थमित्यस्य व्यावर्तकविशेषणवाचकमिति व्याख्यानमयुक्तमनुपयुक्तश्चेत्यत आह– **सर्ववर्णेति** ।। लक्षणया सर्ववर्णाश्रमप्रतिपादनमित्यर्थः । ननु उपलक्षणायेदमिति चतुर्थीसमासोऽपि सुवचः । ब्राह्मणार्थं पय इतिवत् । सत्यम् । प्रकारान्तरमेतत् उपेयप्रतिपत्त्यर्था उपाया अवव्यस्थिता इत्युक्तेः । **वक्तर्यायत्त इति** ।। आयतत इत्यायत्तः । अकर्मकत्वात् कर्तरि क्तः । तथाच आयत्तपदप्रकृत्यर्थक्रियाश्रयं शब्दप्रयोगरूपकर्तारं प्रति वक्तुरधिकरणत्वाद् वक्तरीति सप्तम्युपपन्नेति बोध्यम् । अर्जुनजीवे तद्देहे वा फलकामकार्यत्वस्याप्रसक्तेः तन्निषेधोनुपपन्न इत्यतो द्वेधा व्याचष्टे– **फलकाम इति वक्ष्यतीति** ।। अतस्तदेव कार्यमित्यनेनेति शेषः ।।

**भाष्यम्– स हि ज्ञानी नरांश इन्द्रश्च । मोहादिस्त्वभिभवादेः । यदि तेषां शुद्धसत्त्वानां न स्यात् ज्ञानं कान्येषाम् । उपदेशादेश्च सिद्धं ज्ञानं तेषाम् । 'पार्थार्ष्टिषेण'** (भाग.२.७.४५) **इत्यादि ज्ञानिगणनाच्च ।।**

## भावप्रदीपिका

अर्जुनस्य ज्ञानित्वमेव कुतः? इत्यत आह– **स हीति** ।। अर्जुनस्य ज्ञानित्वे मोहप्रश्नादिकं कथम्? इत्यत आह– **मोहादिरिति** ।। आदिपदाद्विशेषज्ञानस्थितस्थापनादि । इन्द्रादीनां ज्ञानित्वं कुतः? इत्यत आह– **यदीति** ।। इतश्चेन्द्रादयो ज्ञानिन इत्याह– **उपदेशेति** ।। 'एतदु है वेन्द्रो विश्वामित्राय प्रोवाच' इत्याद्युपदेशः । इतश्चार्जुनो ज्ञानीत्याह– **पार्थेति** ।। ४७ ।।

## भावप्रकाशिका

नन्विन्द्रत्वादर्जुनोऽपि ज्ञानी चेत् अर्जुनस्यैव कथं मोहादिर्महाधर्मादौ? इत्यत आह– **मोहादिरिति** ।। नन्विन्द्रादीनां ज्ञानसिद्धौ पश्चान्मोहादेर्गतिर्वक्तव्या । तदेव कुतः? इत्यत आह– **यदीति** ।। इतोऽपि तेषां ज्ञानं सिद्धमित्याह– **उपदेशादेरिति** ।। 'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः । न केवलं इन्द्रावतारत्वादर्जुनो ज्ञानी, किन्तु ज्ञानिषु गणनाच्च इत्याह– **पार्थेति** ।। ४७ ।।

## प्रमेयदीपिका

नन्वर्जुनस्य ज्ञानित्वे स्यादिदम् । तदेव कुतः? इत्यत आह– **स हीति** ।। हिशब्दसूचितां प्रमाणप्रसिद्धिमेव दर्शयति– **नरांश इति** ।। कथं तर्हि 'यज्ज्ञात्वा न पुनर्मोहम्'(४.३५) इत्यर्जुनस्य मोह उच्यते? कथं च प्रश्नकरणम्? इत्यत आह– **मोहादिरित्विति** ।। बलवता प्रारब्धकर्मादिना ज्ञानस्याभिभवान्मोहः विशेषज्ञानाद्यर्थः प्रश्न इति भावः । नन्विन्द्रादीनामेव कुतो ज्ञानित्वम्? इत्यत आह– **यदीति** ।।

सत्वं हि ज्ञानकारणम् । 'सत्वात् सञ्जायते ज्ञानम्' (१४.१७) इति वचनात् । देवाश्च शुद्धसत्वाः । अतः कारणसद्भावाद्युक्तम्– **तेषां ज्ञानम्** । अन्यथा न कस्यापि स्यात् ।।

इतश्चेन्द्रादयो ज्ञानिन इत्याह– **उपदेशेति** ।। 'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः । आदिपदेन प्रजापतौ ब्रह्मचर्यम् ।। अर्जुनस्य ज्ञानित्वे प्रमाणान्तरमाह– **पार्थेति** ।। ज्ञानिषु गणनात् ।। एतेनापव्याख्यानमपि निरस्तम् ।। **विशेषज्ञानाद्यर्थ इति** ।। अनेनाद्यादिशब्देन प्रश्नस्य, द्वितीयादिशब्देनाप्राप्तविशेषज्ञानप्राप्तज्ञानस्थिरीकरणयोः ग्रहण-मित्युक्तं भवति ।।

## भावबोधः

**प्रजापतौ ब्रह्मचर्यमिति** ।। अपरोक्षज्ञानिनामेव चतुर्मुखोपदेशयोग्यत्वादर्जुनस्य ज्ञानित्वा-भावे तदर्थं 'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः' इत्यादिनोक्तमिन्द्रस्य प्रजापतौ ब्रह्मचर्यं न स्यादित्यर्थः । **एतेनेति** ।। 'कर्मण्येवाधिकारस्ते' इति कर्माधिकारिणोऽर्जुनस्य ज्ञानित्व-प्रतिपादनेनाज्ञानिनः कर्मोच्यते इत्यपव्याख्यानं निरस्तमित्यर्थः ।।

## भावदीपः

**ब्रह्मचर्यमिति** ।। ब्रह्मज्ञानाय चरणं ग्राह्यमित्यर्थः । एतच्च छान्दोग्याष्टमाध्याये व्यक्तम् । **ज्ञानिषु गणनादिति** ।। द्वितीयस्कन्धे सप्तमाध्याये 'वेदाहमङ्ग' इत्युपक्रम्य 'पार्थार्ष्टिषेणविदुर-श्रुतसेनभूपाः । ते वै विदन्ति' (भाग.२.७.४५) इति ग्रन्थेन गणनादित्यर्थः ।। **अपव्याख्यान-मिति** ।। 'यावानर्थः' (२.४६) इति श्लोके ज्ञानिनः कर्माभावमुक्त्वा, इदानीमज्ञानिनः

श्लोकः ४७

कर्मोच्यते' इत्येतदपव्याख्यानम् 'एतेन' इत्युक्तार्जुनस्य ज्ञानित्वकथनेन निरस्तमित्यर्थः । न केवलं कैमुत्यसूचनमित्यपेरर्थः ॥

## भावरत्नकोशः

विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्नरः स्मृतः' इति शास्त्रसिद्धनरांशवत्त्वादिन्द्रावतारत्वाच्चार्जुनो ज्ञानीति भाष्यार्थ इति भावेन तदवतारयति– **हिशब्देनेति** ॥ 'नरांशयुक्तेन्द्रत्वेन ज्ञानित्वात्रगमः' इति तु प्राचीनटीका । प्रश्नकरणं 'बुद्धिं मोहयसीव मे । तदेकं वद निश्चित्य' इत्यादिप्रश्नकरणम् । 'बलवता प्रारब्धकर्मादिना' इत्यत्र आदिशब्देन प्रबलविकर्मग्रहः । सुधायां प्रबलविकर्मणो ज्ञानाभिभावकत्वोक्तेः । विशेषज्ञानाद्यर्थ इत्यत्र आदिपदेन प्राप्तज्ञानस्थिरीकरणं गृह्यते ।

'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति'

इत्यादेः । इन्द्रादयो ज्ञानिनो भवितुमर्हन्ति । ज्ञानसामग्रीसम्पन्नत्वादिति भाष्याभिप्रेतानुमानेऽसिद्धिमुद्धर्तुमाह– **सत्त्वं हीति** ॥ अत्र विपक्षे बाधकतर्कमाह– **अन्यथेति** ॥ अत एव भाष्ये यदिस्याच्छब्दौ तर्कलिङ्गे इति भावः । भाष्ये चशब्दादाह– **इतश्चेति** ॥

**एतदु हैवेन्द्र इति** ॥ पादान्त्यप्राणाधिकरणन्यायेनेन्द्रशब्दस्य भगवत्परत्वेऽपि मुख्यवृत्त्या शचीपतिरपि प्रतिपिपादयिषित इति भवत्येवायमिन्द्रोपदेशः । **ब्रह्मचर्यमिति** ॥ ब्रह्मज्ञानाय चरणम् । ग्राह्यमिति शेषः । 'इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' इत्यारभ्य 'तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः' इतीन्द्रस्य चतुर्मुखे ब्रह्मचर्यं श्रूयते । समापादितब्रह्मचर्याणां ज्ञानिनामेव चतुर्मुखोपदेशयोग्यत्वं नाज्ञानिनामितीन्द्रस्यैतदन्यथानुपपत्त्याऽपि ज्ञानित्वं निश्चीयते । विरोचने ब्रह्मचर्ये विरिञ्चोपदेश्यत्वे च सत्यपि तत्त्वज्ञानानुकूलब्रह्मचर्यं योग्यत्वं च विवक्षितमिति न तत्र व्यभिचार इति भावः । **अर्जुनस्येति** ॥ पूर्वं नरांशत्वेनेन्द्रावतारत्वेन चार्जुनस्य ज्ञानित्वमित्युक्तम् । इदानीमर्जुनमधिकृत्यैव ज्ञानित्वमित्यत्र प्रमाणमाहेत्यर्थः । उक्तानुमानमपेक्ष्योक्तम्– **प्रमाणान्तरमिति** ॥ ज्ञानिभिर्गणनादित्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **ज्ञानिष्विति** ।

'येऽन्ये विभीषणहनूमदुपेन्द्रदत्ताः पार्थार्ष्टिषेणविदुरश्रुतसेनभूपाः ।
ते वै विदन्त्यतिरन्ति च देवमायाम्'

इति द्वितीयस्कन्धे ब्रह्मणा नारदं प्रति ज्ञानिगणनावसरेऽर्जुनस्य ज्ञानिषु गणितत्वादित्यर्थः । सप्तमीति योगविभागात् समास इति भावः । एतेनेति ।। ज्ञानिन एवार्जुनस्य 'कर्मण्येवाधिकारस्ते' इति कर्माभिधानेनात्र अज्ञानिनः कर्मोच्यत इत्यन्यथाव्याख्यानं निरस्तमित्यर्थः ।।

## भावदीपिका

मूलगतादिशब्दार्थमाह– **कथञ्चेति** ।। **प्रश्नेति** ।। तस्य सन्देहमूलकत्वाज्ज्ञानिनोऽर्जुनस्य सन्देहाभावादिति भावः । प्रारब्धकर्मादिना इत्यत्राऽदिपदेन भूसम्बन्धमानुषान्नोपभोगादिसङ्ग्रहः । विशेषज्ञानात् इत्यत्राऽदिपदेन ज्ञातस्य स्थिरीकरणं ग्राह्यम् । जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च । पृच्छन्ति साधवो यस्मात् तेन पृच्छसि पाण्डव इति वचनादिति भावः । अनेनाऽद्यादिपदेन प्रश्नस्य ग्रहणम् । द्वितीयादिपदेन चाप्राप्तविशेषज्ञानप्राप्तज्ञानस्थिरीकरणयोर्ग्रहणमिति ज्ञातव्यमित्युक्तं भवति ।। **इन्द्रादीनामेवेति** ।। आदिपदेन नरग्रहणम् । येन तदंशत्वेनार्जुनस्यापि ज्ञानित्वं स्यादिति भावः ।। **कारणेति** ज्ञानकारणेत्यर्थः ।।

**एतदु हैवेन्द्र इति** ।। इन्द्रस्याज्ञानित्वे ऋषिं प्रत्युपदेशासम्भवादिति भावः ।। **प्रजापतौ ब्रह्मचर्यमिति** ।। इन्द्रो ह वै देवानां प्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रति प्रजापतिसकाशमाजग्मतुः तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच इत्यादिनेन्द्रस्य प्रजापतौ चतुर्मुखे ब्रह्मचर्यं तदुपदेशश्च श्रूयते । यदि चेन्द्रो न ज्ञानी स्यात् तदा चतुर्मुखोपदेशयोग्यत्वं न स्यात् । ज्ञानिनामेव चतुर्मुखोपदेशयोग्यत्वादतः सिद्धमिन्द्रस्य ज्ञानित्वमिति भावः । न च प्रजापतिना 'अथ य एषोऽन्तरक्षणि' इत्यादिना विरोचनं प्रत्यप्युपदिष्टत्वात् तस्यापि ज्ञानित्वप्राप्तिरिति वाच्यम् । अत्र समीचीनोपदेशस्य योग्यतायाश्च विवक्षितत्वात् । यथोक्तम् सर्वथाऽपि तु त एवोभयलिङ्गात् इति ।। **अर्जुनस्येति** ।। पूर्वमिन्द्रादीनां ज्ञानित्वात् तदंशभूतस्यार्जुनस्यापि ज्ञानित्वमित्युक्तम् । इदानीं तु साक्षादर्जुनस्यैव ज्ञानित्वे प्रमाणान्तरमाहेत्यर्थः । ज्ञानिभिर्गणनादित्यन्यथाप्रतीतिनिरासायाऽह– **ज्ञानिष्विति** ।।

श्लोकः ४७

'वेदाहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः ।
पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिऋभुरङ्ग उत ध्रुवश्च ॥
इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिपृथ्वम्बरीषसगरा गयनाहुषाद्याः ।
मान्धात्रलर्कशतधन्वनरन्तिदेवदेवव्रता बलिरमूर्तिरयो दिलीपः ॥
सौभर्युदङ्क शिबिदेवलपिप्पलाद्याः सारस्वतोद्धवपराशरभूरिषेणाः ।
येऽन्ये विभीषणहनूमदुपेन्द्रदत्ता पर्थार्ष्टिषेणविदुरश्रुतदेवभूपाः ॥
ते वै विदन्त्यतितरन्ति च देवमायाम्'

इति द्वितीयस्कन्धे ब्रह्मणा नारदं प्रति ज्ञानिगणनकालेऽर्जुनस्य ज्ञानित्वप्रतिपादनेनाज्ञानिनः कर्मात्रोच्यत इत्यपव्याख्यानं निरस्तमित्यर्थः ॥

## भावप्रकाशः

**विशेषज्ञानाद्यर्थ इति ॥** आदिपदेन प्राप्तज्ञानस्थिरीकरणसङ्ग्रहः । **प्रजापतौ ब्रह्मचर्यमिति ॥** अपरोक्षज्ञानिनामेव चतुर्मुखोपदेशयोग्यत्वात् । इन्द्रस्य ज्ञानित्वाभावे तदर्थं तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुरित्याद्युक्तमिन्द्रस्य प्रजापतौ ब्रह्मचर्यन्न स्यादित्यर्थः । अत्र तत्त्वज्ञानहेतु-ब्रह्मचर्यं विवक्षितमिति न विरोचने व्यभिचारः । ज्ञानिकर्तृकं पार्थादिकर्मकं गणनं न पार्थादि-ज्ञानित्वे मानमित्याशङ्क्य सप्तमीति योगविभागान्निर्धारणसप्तमीसमासमभिप्रेत्याह– **ज्ञानिषु गणनादिति ॥** पार्थार्ष्टिषेणविदुरश्रुतदेवमुख्या इति द्वितीयस्कन्ध इति शेषः । **एतेनेति ॥** ज्ञानिन एवार्जुनस्य कर्मण्येवाधिकार इति कर्माधिकारप्रतिपादनेनाज्ञानिनः कर्मोच्यत इत्यपव्याख्यानं निरस्तमित्यर्थः ॥

**भाष्यम्– कामनिषेध एवात्र । फलानि ह्यस्वातन्त्र्येण भवन्ति । न हि कर्मफलानि कर्माभावे यत्नतो भवन्ति । भवन्ति च काम्यकर्मिणो विपर्ययप्रयत्नेऽप्यविरोधे ॥**

## भावप्रदीपिका

ननु 'मा फलेषु' इति फलाधिकारात् प्रतिषिध्यते । ततः कथमियं व्याख्या? इत्यत आह– **कामेति ॥** 'क्रियते' इति शेषः । यो यत्कर्तुं स्वतन्त्रः स तत्र विधिनिषेधगोचरः ॥ न च

फलोपादानहानयोः पुरुषः स्वतन्त्रः । अतः कामनिषेध एव न फलनिषेध इत्यर्थः । तदेव प्रपञ्चयति– **न हीति** ॥ **अविरोधे** भगवदपरोक्षादिविरोधाभावे ॥

## भावप्रकाशिका

यद्यप्यस्मिन् श्लोके मा फलेष्वधिकार इत्येवोच्यते न तु कामेष्विति । तथाऽपि अत्र कामनिषेध एव क्रियते 'तस्मान्नेष्टियाजुकः स्यात्' इति श्रुतेः, फलस्य स्वप्रयत्नानधीनत्वेन निषेधायोगादिति भावेनाह– **कामनिषेध इति** ॥ स्वप्रयत्नानधीनत्वमेव फलस्यान्वयव्यतिरेकाभ्यां दर्शयति– **न हीति** ॥ **अविरोधे** विरोधिभगवदपरोक्षाद्यभावे । अपरोक्षज्ञानिनस्त्वनिष्टपुण्यस्यास्पर्शादिति भावः ।

## प्रमेयदीपिका

नन्वत्र 'मा फलेषु'इति फलविषयो निषेधः कृतः । तत्कथमुक्तं 'फलकाम' इति? तत्राह– **कामेति** ॥ फलशब्देन तद्विषयकं काममुपलक्ष्य तद्विषयो निषेधोऽत्र क्रियते । न फलविषय इत्यर्थः । कुतो लक्षणाश्रयणम्? इत्यत आह– **फलानि हीति** ॥ यत्र हि पुरुषस्य कतुमकर्तुं वा स्वातन्त्र्यं तत्रैव निषेधो नान्यत्र । प्रसक्तेरभावात् । न च फलेषु स्वातन्त्र्यमस्ति । अतो मुख्ये बाधकाल्लक्षणाश्रयणमित्यर्थः । कथम् अस्वातन्त्र्यम्? इत्यतः करणे तावदाह– **न हीति** ॥ अकरणेऽपि तदाह– **भवन्ति चेति** ॥ चोऽवधारणे । **अविरोधे** ब्रह्मदर्शनादितद्विरोध्यभावे । तदनेन 'ते' इति 'फलेषु' इति च पदद्वयं व्याख्यातम् ॥

## भावदीपः

**नच फलेषु स्वातन्त्र्यमिति** ॥ 'कर्तुमकर्तुं च' इत्यनुषङ्गः । **कथमस्वातन्त्र्यम्** इत्यत्रापि 'फलेषु कर्तुमकर्तुं च' इत्यनुषङ्गः ॥ **करणे इति** ॥ फलनिष्पादने इत्यर्थः ॥ **अकरणेऽपीति** ॥ फलानिष्पादनेऽपीत्यर्थः ॥ **तदनेनेति** ॥ 'त इत्युपलक्षणम्' इत्यादिना 'विरोधः' इत्यन्तेनेत्यर्थः ॥

## भावरत्नकोशः

तथा च शङ्करः 'प्राग् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन त्वया कर्म कर्तव्यम्' इति ॥

श्लोकः ४७

**सप्तम्यर्थो विषय इति ॥ फलकामेतीति ॥** न फलकामकर्तव्यतेत्यनेन कामनिषेधः कृत इति कथं भाषितमित्यर्थः । भाष्योक्तमुपपादयितुमाह– **यत्र हीति ॥ प्रसक्तेरिति ॥** अप्रसक्तस्य प्रतिषेधो न युक्तः । 'नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इत्यादि तु मीमांसकैर्व्याख्यातमिति न कापि अनुपपत्तिरिति भावः ॥ **न च फलेषु स्वातन्त्र्यमिति ॥** कर्तुमकर्तुं वेत्यनुषङ्गः । कथम-स्वातन्त्र्यमित्यत्रापि फलेषु कर्तुमकर्तुं वेत्यनुषङ्गः । **करणे** फलसम्पादने । **आह** अस्वातन्त्र्यम् । **तद्विरोधीति ॥** काम्यफलप्राप्तिविरोधीत्यर्थः । काम्यकर्मानुष्ठाय न ममैतत् कर्मफलमस्त्विति वैराग्ये यत्नतः कृतेऽपि भगवदपरोक्षज्ञानाभावे काम्यकर्मफलमैश्वर्यादिकमनुष्ठातुर्भवत्येवेति फलानापादनेऽपि पुरुषस्य न सामर्थ्यमिति भाष्यार्थ इति भावः । **अनेन 'ते इत्युपलक्षणार्थम्'** इत्यादिना 'अविरोधः' इत्यन्तेन । अर्जुनस्य ज्ञानित्वोपपादनाय फलशब्देन फलकामो लक्षणीय इत्युपपादनाय चेतरद् भाष्यमिति भावेनोक्तं **पदद्वयमिति ॥** यद्यपि 'कामनिषेध एवात्र' इति भाष्येण माशब्दोऽपि व्याख्यात इति पदत्रयमिति वक्तव्यम् । तथाऽपि पदद्वय-व्याख्यान इव न माशब्दव्याख्याने भाष्यकारस्य अतिप्रयत्न इति भावेनैवमुक्तम् ॥

## भावदीपिका

॥ **कुत इति ॥** मुख्ये बाधाभावादित्यर्थः ॥ **करण इति ॥** फलसम्पादन इत्यर्थः ॥ **अकरणे ॥** फलासम्पादने इत्यर्थः ॥ **तद्विरोधीति** काम्यफलविरोधीत्यर्थः । भाष्ये विपर्यय-प्रयत्नशब्देन वैराग्यविषयप्रयत्नो ग्राह्यः । काम्यं कर्म कृत्वा एतत्फलं मम माऽस्त्विति वैराग्ये कृतेऽपि काम्यकर्मफलमैश्वर्यादिकं तस्य भवत्येवेति अकरणेऽपि न स्वातन्त्र्यमित्यर्थः । इदं च ब्रह्मदर्शनादिविरोध्यभावदशायामेव । तत्सद्भावे तु अनिष्टकाम्यकर्मणः फलमदत्त्वैव सञ्चित-वन्नाशाङ्गीकारादिति ज्ञेयम् । आदिपदेन विष्णुवैष्णववाक्यसङ्ग्रहः ॥

## भावप्रकाशः

**ब्रह्मदर्शनादीति ॥** आदिपदात् कर्मनाशजलस्पर्शादिग्रहणम् ॥

**भाष्यम्– अतः कर्माकरण एव प्रत्यवायो न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ । अतः कर्मण्येवाधिकारः । अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः ॥**

## भावप्रदीपिका

ततश्च कोऽर्थो वाक्यस्य? इत्यत आह– **अत इत्यादि** ॥ अकामनया फलाप्राप्तिः इति पलाप्राप्तिनिमित्तेन कामनाभावेन प्रत्यवाय इत्यर्थः । कामेन फलप्राप्तिः इति फलप्राप्त्यर्थं काम इत्यर्थः ॥

## भावप्रकाशिका

यत एवं प्राप्तस्य निषेधः, अतः कर्माकरण एव प्रत्यवायोक्तिः, तदभावोक्तिश्च कामाकरणे । न त्वकाम्यफलाप्तौ घटते, यथा भगवदपरोक्षज्ञानादिनेत्याह– **अत इति** ॥ यदकरणे प्रत्यवायः तत्रैवाधिकारो नेतरत्रेत्याह– **अतः कर्मण्येवेति** ॥ यत्राधिकारः तदेव कार्यं नेतरदित्याह– **अतस्तदेवेति** ॥

## प्रमेयदीपिका

स्यादेतत् । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कर्तव्यतया उच्यते । अतो न कामात्मनां निन्दोचितेति शङ्कायां, किमेतत् 'कर्मण्येवाधिकारः' इत्याद्यसङ्गतमुच्यते? यश्च कर्मवत् कामनाया अपि कार्यतां मन्यते, कुतस्तस्य फलकामनायामधिकाराभावः सिद्धः । 'फलेषु' इति लाक्षणिकपदप्रयोगे च किं निमित्तम्? इत्याशङ्क्य पूर्वार्धं व्याचष्टे– **अत इति** ॥ 'अतः' इत्यस्य वक्ष्यमाणेन 'भूत्वा' इत्यतः परेण 'इत्यर्थः' इत्यनेनान्वयः ॥

**अतः** उक्तन्यायेन पदद्वयस्य लाक्षणिकत्वे सतीत्यर्थः । श्लोकार्धस्य सम्पद्यते इति शेषः ॥

तत्र तावत् कर्मण्येवाधिकारः सर्ववर्णाश्रमिणां न फलकामनायाम् इत्युक्तेऽर्थद्वये हेतुद्वयमाह– **कर्माकरण एवेति** ॥ 'कुर्वन्नेवेह कर्माणि'(ईशा.२) इत्युक्त्वा 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'(ईशा.२) इत्युक्तत्वात् कर्माकरण एव प्रत्यवायोऽनिष्टप्राप्तीष्टाप्राप्तिलक्षणः । नत्वकामनया प्रत्यवायः । प्रमाणाभावात् ॥

ननु कामाभावे तत्फलानवाप्तेः कथं प्रत्यवायाभावः? इत्यत उक्तम्– **फलाप्राप्ताविति** ॥ काम्यफलाप्राप्तावपि न प्रत्यवाय इत्येतदुपपादनायोक्तम्– **ज्ञानादिना वेति** ॥ वाशब्द

उपमायाम् ।। यथा ज्ञानादिना साधनेन मोक्षं गच्छतः स्वर्गाद्यलाभो न खेदहेतुः । महाफल-लाभेऽल्पहानेरकिञ्चित्करत्वात् । तथा अकामनया फलाप्राप्तौ अपि न खेदः । निष्कामेन कर्मणा महाफलस्य ज्ञानादेर्लाभादिति भावः ।। ततः किम्? इत्यत उक्तस्य हेतुद्वयस्य गीतोक्तं साध्यद्वयमाह– **अत इति** ।। 'न तु फलकामनायाम्' इति च वक्तव्यम् । यत एवं कर्माकरणे प्रत्यवायः अतः कर्मण्येवाधिकारः ।। यतः कामाकरणे न प्रत्यवायोऽतो न कामेऽधिकार इत्यर्थः । ततः किं प्रकृते? इत्यतः परमसाध्यद्वयमाह– **अत इति** ।। यतः कर्मण्येवाधिकारः, **अतस्तदेव कार्यम्** । विधिविषय इत्यर्थः । यतः कामे नाधिकारोऽतः कामेन न फलप्राप्तिः फलप्राप्तये काम न कार्यः इति यावत् । तत्र दृष्टान्तः– ज्ञानादिनिषेधेन वेति ।। अत्रापि वाशब्द उपमायाम् । यथा प्रेक्षावता ज्ञानादिकं परित्यज्य फलप्राप्तिर्न क्रियते तथेत्यर्थः । पूर्वोक्त एवाभिप्रायः ।।

## भावबोधः

**फलाप्राप्तावपि न खेद इति** ।। अनेन फलेष्विति लाक्षणिकपदप्रयोगे काम्यफल-रूपेष्टानवाप्तिलक्षणप्रत्यवायाभावोपपादनं प्रयोजनमित्युक्तं भवति । तथाहि फलेष्वित्यनुक्त्वा कामनायामित्येवोक्तौ फलानुपस्थित्या कामनायामधिकाराभावे हेतुतया अकरणे प्रत्यवाया-भावोक्तौ काम्यफलरूपेष्टानवाप्तिलक्षणप्रत्यवायसद्भावशङ्कानुदयेन तदभावप्रतिपादनानवकाशात् । फलेष्वित्युक्तौ तु फलोपस्थित्योक्तशङ्कोदयेन तदभावप्रतिपादनसम्भवादिति भावः । तदिदं सर्वमभिप्रेत्य वक्ष्यति एतदुपपादनाय लाक्षणिकफलशब्दोपादनमिति । **ज्ञानादिकं परित्यज्येति** ।। ज्ञानादिसाधनीभूतनिष्कामकर्म अकृत्वेति यावत् । काम्यकर्मकरणेन स्वर्गादिफलप्राप्तिः प्रेक्षावता यथा न क्रियते, तथा ज्ञानादिसाधननिष्कामकर्म अकृत्वा काम्यकर्मकरणेन स्वर्गादिप्राप्तिर्न कर्तव्येत्यर्थः । कुत इत्यत आह– **पूर्वोक्त एवाभिप्राय इति** ।। स्वर्गाद्यल्पफलापेक्षया ज्ञानादेर्महा-फलत्वादित्यर्थः ।।

## भावदीपः

**हेतुद्वयमिति** ।। 'प्रत्यवाय' इत्यन्तेनैको हेतुः । नत्वकामनया फलाप्राप्तौ' इत्यनेनापर इति क्रमेणार्थद्वये हेतुद्वयमिति भावेन आद्यं तावद्व्यनक्ति– **कुर्वन्नेवेति** ।। इह मानुषादि जन्मनि ।।

इत्युक्त्वेति ॥ ईशावास्ये । एवं कर्माणि कुर्वन् इति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । इतोऽन्यथा कर्माकरणे पापं कर्म न लिप्यत इति नास्तीति भगवत्पूजात्मककर्माकरणे अनर्थस्योक्तत्वादित्यर्थः ॥ प्रत्यवायपदानुषङ्गेण अन्तिमहेतुं व्यनक्ति– **नन्विति** ॥

वापदं भिन्नक्रममुपेत्य आह– **ज्ञानादिना वेति** ॥ तावता नन्वित्यादिना कृतचोद्यस्य कः परिहारः? इत्यतोऽभिप्रायं व्यनक्ति– **यथेति** ॥ **साध्यद्वयमाहेत्युक्तं** भाष्ये । द्वितीयसाध्या-प्रतीतेरित्यत आह– **न तु फलकामनायामिति च वक्तव्यमिति** ॥ अधिकारपदानन्तरमिति भावः । अतःपदस्य उभयत्रान्वयमुपेत्य यथायोगमर्थमाह– **यत एवमिति** ॥ 'स्वर्गकामो यजेत' इति वाक्यस्य विशिष्टविधित्वभ्रान्तिनिरासेन यथावदर्थकत्वोक्तिपरत्वात् । पूर्वार्धस्य तदनु-गुणतया कार्यपदस्यार्थमाह– **विधिविषय इत्यर्थ इति** ॥ 'यतः' 'कामे' इति 'नाधिकारः' इति पदविभागः ॥ **न कार्य इति** ॥ 'यजेत' इति विधिविषयः स्वर्गकामो नेत्यर्थः । **फलप्राप्तिः** स्वर्गाद्यल्पफलप्राप्तिः इत्यर्थः ॥ **पूर्वोक्त एवेति** ॥ महाफलज्ञानादिलाभे अल्पफलस्वर्गादिहानेः अकिञ्चित्करत्वात् इत्युक्त एवेत्यर्थः ॥

## भावरत्नकोशः

विशिष्टविधित्वं मन्यते पूर्वपक्षीति प्रागुक्तं विवृण्वन्नुत्तरभाष्यमवतारयति– **स्यादेतदिति** ॥ पूर्वमेतद्वाक्यार्थस्यानुक्तत्वान्न तदुपसंहारार्थातःशब्दो युक्त इत्याशङ्क्य सप्तम्यन्तादेतच्छब्दात् 'आद्यादिभ्य उपसङ्ख्यानम्' इति तसिप्रत्यय इति भावेन भाष्यमनूद्य व्याचष्टे– **अत उक्त-न्यायेन इति** ॥ **पदद्वयस्य** अत इति पदस्य, फलपदस्य च सर्ववर्णाश्रमोपलक्षणत्वेन, फल-कामोपलक्षणत्वेन च लक्षणया प्रतिपादकत्वे सतीत्यर्थः । 'इत्यर्थः' इति भाष्यानन्तरं पूरणीयमाह– **श्लोकार्धस्येति** ॥ त इत्यस्योपलक्षितार्थोक्तिः– **सर्ववर्णाश्रमिणामिति** ॥

'मा फलेषु' इत्यस्य लक्षितार्थोक्तिः– **न फलकामनायामिति** ॥ अर्जुनादिसर्ववर्णाश्रमिणां कर्मण्येवाधिकारः कर्माकरणे प्रत्यवाय इत्यर्थो हि विवक्षितः । न चासौ युक्तः । ज्ञानिनां पापलेपाभावात् । ज्योतिष्टोमाद्यननुष्ठाने प्रत्यवायायोगाच्चेत्यत आह– **अनिष्टप्राप्तीष्टाप्राप्तीति** ॥ अज्ञानिनः स्वोचितकर्माकरणे प्रागुत्तरपापबाधरूपानिष्टप्राप्तिः, ज्ञानलक्षणेष्टाप्राप्तिश्च । तथा चोक्तमीशावास्यटीकायाम् 'शतं समाः शतवर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत्

श्लोकः ४७

जीवितुमिच्छेत् तत् कर्माणि स्वोचितानि कुर्वन्नेव आमरणं भगवत्पूजात्मकान्यसङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि प्रागुत्तराणि पापानि न बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणा-दन्यथा स्वोचितकर्माकरणे कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अतः कर्माणि कार्याणि' इति ।। ज्ञानिनोऽपि मौक्तानन्द-ह्रासरूपानिष्टप्राप्तिः, यावत्स्वरूपाविर्भावरूपेष्टाप्राप्तिश्चास्ति । तथा च तत्त्वप्रकाशिकायां 'एवं कर्मकरणे त्वयि कर्म न लिप्यते । इतोऽन्यथा अकरणे नरे ज्ञानिन्यपि त्वयि पापकर्म न लिप्यत इति नास्ति' इति ।। एवं च ज्ञान्यज्ञान्युभयपरत्वमस्य मन्त्रस्येति भावेन अस्योदाहरणमुपपन्नमिति ज्ञेयम् ।

एतेन ज्ञानिनां पापलेपाभावादिति प्रत्युक्तम् । फलाप्राप्तावित्यत्रोपस्कर्तव्यमाह– **काम्य-फलेति** ।। प्रत्यवायः इष्टाप्राप्तिलक्षणः । 'वा विकल्पोपमानयोः' इत्यभिधानादाह– **वाशब्द इति** ।। 'उपमायाम्' इत्येतद् विवृणोति– **यथेति** ।। **खेदहेतुः** अनलम्बुद्धिहेतुः । **उक्तहेतुद्वयस्य** प्रत्यवायभावाभावरूपहेतुद्वयस्य । भाष्येऽनुक्तेर्गीतोक्तस्य 'मा फलेषु' इति साध्याभिधानस्य तात्पर्यं वदन् शेषमाह– **न त्विति** ।। 'अतः' इति भाष्यमावर्तयन् तत्प्रतियोग्याह– **यत एवमिति** ।।

**प्रकृते** स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति कृतचोद्ये । तदेव कर्मैव । कार्यं करणीयमिति व्याख्याने कृतिकर्मत्वस्य कामनायामपि साम्येन प्रकृतासामञ्जस्या-दाह– **विधिविषय इति** ।। लिङ्लोट्तव्यप्रत्ययपञ्चमलकारैर्विहितहेतुतया बोधनीय इत्यर्थः । **यतः कामे नाधिकार इति** ।। कामे कामनायां यतोऽधिकारो नेत्यन्वयः । कामाकर्तव्यत्वे हेतोरुक्तत्वात् कामो न कार्य इति भाषणीये कामेन फलप्राप्तिरिति कथं साध्यनिर्देश इत्यत आह– **फलप्राप्तये काम इति यावदिति** ।। स्वर्गप्राप्तये यागो यथा साधनत्वेनेष्यते न तथा फलप्राप्तये काम एष्टव्य इत्यर्थः । **ज्ञानादिकमिति** ।। ज्ञानादिसाधनीभूतं निष्कामकर्माकृत्वे-त्यर्थः । निवृत्तकर्माण्यननुष्ठाय केवलकाम्यकर्मकरणेन स्वर्गादिसम्पादनं यथाऽप्रेक्षापूर्वकारिणा क्रियते तथा प्रेक्षावता ज्ञानादिसाधननिष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलं न

सम्पाद्यमिति भावः । कर्मैव कार्यं कामना तु न कार्येति यदि तर्हि कामितफलाप्राप्त्या खेदः स्यादित्यत आह– **पूर्वोक्त एवेति** ॥ कामनया स्वर्गाद्यलाभो न खेदहेतुः । महाफललाभेऽल्पफलहानेरकिञ्चित्करत्वादिति पूर्वोक्त एवाभिप्राय इत्यर्थः ॥

## भावदीपिका

**कथं प्रत्यवायाभावः इति** ॥ इष्टाप्राप्तिरूपः प्रत्यवायोऽस्तीति भावः । खेद इष्टाप्राप्तिरूपः प्रत्यवायः ॥ **उक्तस्य हेतुद्वयस्येति** ॥ कर्माकरणे प्रत्यवायरूपस्य कामनाकरणे प्रत्यवायाभावरूपस्य हेतुद्वयस्येत्यर्थः । ननु कृतिविषयत्वरूपकार्यत्वस्य कर्मणीव कामनायामपि सत्त्वात् कथं कर्मैव कार्यं न कामनेत्युच्यत इत्यत आह– **कार्यं विधिविषय इति** ॥ **तत्र** फलप्राप्तये कामो न कार्य इत्यत्र ॥ **ज्ञानादिकं परित्यज्येति** ॥ ज्ञानादिसाधनीभूतं निष्कामकर्माकृत्वेति यावत् । तथा च निष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलसम्पादनं यथा प्रेक्षावता न क्रियते, तथा ज्ञानिनाऽपि ज्ञानादिसाधनं निष्कामकर्माकृत्वा काम्यकर्मकरणेन स्वर्गादिफलं न सम्पाद्यमित्यर्थः । कर्मैव कार्यं कामना तु न कार्येति यदि तर्हि कामितफलाप्राप्त्या खेदः स्यादित्यत आह– **पूर्वोक्त एवेति** ॥ अकामनया फलाप्राप्तावपि न खेदः । निष्कामकर्मणा महाफलस्य ज्ञानादेर्लाभात् । महाफललाभेनाल्पहानेरकिञ्चित्करत्वादिति पूर्वोक्त एवाभिप्राय इत्यर्थः ॥

## भावप्रकाशः

ननु पूर्वं वाक्यार्थस्यानुक्तत्वेन न तदुपसंहारार्थोऽतःशब्द इत्याशङ्क्य सप्तम्यन्तादाद्यादित्वात् तसिरित्यभिप्रेत्यात इत्येतदनूद्य व्याचष्टे– **अत उक्तन्यायेनेति** ॥ नन्वर्जुनादिसर्ववर्णाश्रमिणां कर्मण्येवाधिकारः कर्माकरणे प्रत्यवायादित्यर्थोऽत्र विवक्षितः । तत्र प्रत्यवायो न पापम् । अर्जुनादिज्ञानिनां पापलेपाभावात् । ज्योतिष्टोमाद्यकरणे प्रत्यवायाभावाच्च । तस्यापि ब्राह्मणादिवर्णोचितत्वेन कर्मपदेन विवक्षितत्वादित्यत आह– **अनिष्टप्राप्तीति** ॥ अत्रायं विवेकः । अज्ञस्य स्वोचितकर्माकरणे प्रागुत्तरपापबाधरूपानिष्टप्राप्तिः ज्ञानरूपेष्टाप्राप्तिश्च । तथैवेशावास्यटीकायामुक्तेः । ज्ञानिनस्तु मौक्तानन्दह्रासरूपानिष्टप्राप्तिः यावत्स्वरूपाविर्भावरूपेष्टाप्राप्तिश्चेति कुर्वन्नेवेति मन्त्रस्येशावास्यटीकायामज्ञानिपरत्वेन तत्त्वप्रकाशिकायां नियमा-

चेत्यत्र ज्ञानिपरत्वेन च स्पष्टं व्याख्यानादत्र तदुदाहरणमुपपन्नमिति ध्येयम् । कर्मकर्तव्यत्वे हेतोरुक्तत्वात् कामो न कार्य इति वाच्यम् । ननु कामेन फलप्राप्तिरिति साध्यनिर्देशः कथमित्यत आह– **फलप्राप्तये काम इति** ।। **यावदिति** ।। ननु फलप्राप्तिः न क्रियते यथेत्ययुक्तं फले पुरुषस्य कर्तुः स्वातन्त्र्याभावेन कार्यत्वाप्रसक्तेः तन्निषेधायोगादित्यत आह– **पूर्वोक्त एवेति** ।। यथा प्रेक्षावता फलप्राप्तये ज्ञानादिपरित्यागो न क्रियत इत्यभिप्राय इत्यर्थः ।।

**भाष्यम्– कामवचनानां तु तात्पर्यं भगवतैवोक्तं 'रोचनार्थं फलश्रुतिः'** (भाग.११.३.४७) । **'यथा भैषज्यरोचनम्'**(भाग.११.२१.२३) **इति भागवते । अत एव कामी यजेतेत्यर्थः । न तु कामी भूत्वेत्यर्थः ।।**

## भावप्रदीपिका

ज्ञानादिना ज्ञानादिनिषेधेन इति दृष्टान्तौ । कामस्याकर्तव्यत्वे किमिति फलश्रुतिः? इत्यत आह– **कामेति** ।। तर्हि 'स्वर्गकामो यजेत' इत्यादेः कोऽर्थः? इत्यत आह– **अत एवेति** ।।

## भावप्रकाशिका

अत्रापि ज्ञानादिनिषेधेन इत्येतद्दृष्टान्तत्वेन । ननु यदि कामनिषेधः तर्हि 'स्वर्गकामः' इत्यादीनां का गतिः? इत्यत आह– **कामवचनानामिति** ।। 'गुडकामः पिबौषधम्' इत्यादिवद्यागादिप्ररोचनार्थं स्वर्गकामादिकम् । उत्पन्नरुचिस्तु 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इत्यादिवाक्यपर्यालोचनया स्वयमेवान्यकामं त्यजतीत्यभिप्रायः । यत एवं भैषज्यरोचनवदन्यार्थयागादिरुच्यर्थमुच्यते स्वर्गकामादिपदं न तु यागादिकं प्रति स्वर्गादेरेवोद्देश्यत्वेन अतो यः स्वर्गादिकामः सोऽपि यजेतेति यागस्यैव विधिरयम्, न तु कामी भूत्वेति कामस्यापीत्याह– **अत एवेति** ।।

## प्रमेयदीपिका

यदि कर्मैव विधिविषयो न कामः, तर्हि 'स्वर्गकामो यजेत' (आप.श्रौ.१०.१.२.१) इत्यादिवाक्यानां किं तात्पर्यम्? इत्यत आह– **कामवचनानां त्विति** ।।

अनादिविषयवासनावासितान्तःकरणाः न सहसा ज्ञानसाधने कर्मणि प्रवर्तयितुं शक्यन्ते । अतस्तेषां कर्मण्यभिरुचिजननार्थं 'स्वर्गकामः' इत्यादि फलश्रुतिः प्रवृत्ता । कर्मणि प्रवृत्तांस्तु शनैः कामं त्याजयिष्यामीत्यभिप्रायवती । यथा फलेन प्रलोभ्य बालानां भैषज्यरोचनं क्रियते तथेत्यर्थः । अस्त्वेवं तात्पर्यम्; योजना तु कथम्? इत्यत आह– **अत एवेति** ॥ यत एवं न्यायेन कर्मणः एव कार्यत्वं न कामस्येति प्राप्तमतः 'कामी यजेत' इत्येव श्रुतेरर्थः । कामानुवादेन यजनं विधीयत इति यावत् । एवशब्दव्यावर्त्यमाह– **न त्विति** ॥ कामविशिष्टयजनविधानं तु नेत्यर्थः ॥

एतदुक्तं भवति । विशिष्टविधानशङ्कायां नेदं विशिष्टविधानम्, किन्तु कामानुवादेन यजनस्यैवेति परमसाध्यमत्राध्याहार्यम् । तत्कुतः? इत्यपेक्षायां कर्मण एव कार्यत्वात्, कामस्य तदभावादिति हेतुवचनं चोपस्कर्तव्यम् । तदपि कुतः? इत्यपेक्षायां कर्मण्येवाधिकारो न फलकाम इति गीतोक्तयोः हेत्वोरुपस्थानम् । एतदपि कुतः? इत्यपेक्षायां कर्मकामकरणाकरणयोः प्रत्यवायभावाभावयोः हेत्वोरध्याहारः । एतदुपपादनाय लाक्षणिकफलशब्दोपादानमिति ॥

## भावदीपः

**इत्यभिप्रायवती इति** ॥ श्रुतिरिति योज्यम् ॥ **तात्पर्यमिति**॥ 'स्वर्गकामो यजेत' इति वाक्यस्येति योज्यम् ॥ **यत एवं न्यायेनेति** ॥ कर्मकामविषयकरणाकरणयोः प्रत्यवायभावाभावहेतुभ्यां कर्मकामयोरधिकारभावाभाव इत्युक्तन्यायेनेत्यर्थः ॥ **कार्यत्वं** विधिविषयत्वमित्यर्थः ॥ **कर्मण्येवेति** ॥ पूर्वार्धं स्वर्गकामवाक्यस्य व्याख्यानपरमित्येतत् । 'अतः कर्म' इत्यादिना 'स्वर्गकामश्रुतेरित्यर्थः' इति पूर्वार्धस्यार्थः । 'सम्पाद्यते' इत्यन्तेन भाष्येणोक्तमर्थं हृद्यारोहाय स्पष्टमाह– 'एतदुक्तम्' इत्यादिना 'अध्याहारः' इत्यन्तेन (इति) ॥

**अत्रेति** ॥ 'कर्मण्येव' इत्यर्धश्लोके ॥ 'फलेषु' इत्यस्य कामोपलक्षकत्वात् 'न फलकाम इति गीतोक्त' इत्युक्तम् ॥ **एतदुपपादनायेति** ॥ कर्मकामविषयककरणाकरणयोः प्रत्यवायभावाभावहेतुककर्माधिकारकामनाधिकारसाधनक, कर्मकामकार्यत्वाकार्यत्वनिमित्तकयजनविधानकामाविधान इत्येतत्प्रणाड्युपपादनायेत्यर्थः ॥ एतेन लाक्षणिकशब्दप्रयोगेन किं प्रयोजनमिति चोद्यं समाहितं ध्येयम् ॥

श्लोकः ४७

## भावरत्नकोशः

**इत्यादिवाक्यानामिति** ।। तैः स्वर्गकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यत इति वचनव्यक्त्यभ्युपगमादिति भावः । **अनादीति** ।। अनादिकालतो वृत्ता या विषयवासना तया वासितमनुषक्तमन्तःकरणं येषां पुंसां ते तथा । कर्मणि अनभिसंहितफले निवृत्तलक्षणे । रोचनार्थमित्यस्यार्थः **कर्मण्यभिरुचिजननार्थमिति** ।। 'फलश्रुतिः' इत्यत्र सोपस्कारं शेषमाह– **स्वर्गकाम इत्यादिफलश्रुतिः प्रवृत्तेति** ।। श्रुतितात्पर्यं विशदयति– **कर्माणीति** ।। **अभिप्रायवती** ।। सा श्रुतिः प्रवृत्तेति वर्तते । **भैषज्यरोचनम्** औषधेऽभिरुचिजननम् । **न्यायेनेति** ।। यत एवं कर्माकरणे प्रत्यवायः अतः कर्मण्येवाधिकारः । यतः कामाकरणे न प्रत्यवायः अतो न कामेऽधिकार इति प्रागुक्तन्यायेनेत्यर्थः । कार्यत्वं विधिविषयत्वम् । विशिष्टविधित्वभ्रान्तिनिरासाय भाष्यभावमाह– **कामानुवादेनेति** ।। **एवशब्देति** ।।

एतेन 'अत एव' इति भाष्यस्थैवशब्दो यजेतेत्येवार्थ इति सम्बद्ध्यत इत्युक्तं भवति । स्यादेतदित्यादिना कृतचोद्यत्रयस्य निरासं गीतारूढं दर्शयितुं भाष्यभावमाह– **एतदुक्तमिति** ।। **कामानुवादेन यजनस्यैवेति** ।। विधानमित्युपस्कर्तव्यम् । फलकामस्य रागशब्दितस्य विषयसौन्दर्यलभ्यस्य पुरुषेषु स्वतस्सिद्धस्य न विधिविषयत्वम् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । तथा च यः कामी स यजेतेति कामस्य अनुवाद्यत्वमेव । अनुवाद्यत्वविधेयत्वे च विरुद्धे अतः कामस्यानुवादेन यजनस्यैवाप्राप्तस्य विधिविषयत्वमित्यर्थः ।

ननु 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणया 'सोमवता यागेन भावयेत्' इति वचनव्यक्तिः । तत्र 'किं भावयेत्' इति भाव्याकाङ्क्षायां 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्येन उत्पत्तिवाक्यप्राप्तसोमयागानुवादेन स्वर्गलक्षणफलसम्बन्धमात्रं विधीयते । 'ज्योतिष्टोमनामकेन यागेन स्वर्गं भावयेत्' इति हि मीमांसकप्रक्रिया । तत्कथं यजनस्यैव विधानमित्युक्तमिति चेत्, उच्यते । क्रिययैव सह विधेरन्वय इति नियमात् क्रियोपरक्ता भावना विधेया । एवञ्च प्रतीतितो विशिष्टविधिः, फलतस्तु फलविधिरिति न मीमांसकप्रक्रियाविरोधः । कामस्यानुवाद्यत्वमनन्तरमेवोक्तमिति । **तत् कुतः?** न कामो विधेयः, किन्तु यजनादिकर्मैव विधेयमिति कस्माद् हेतोरवगन्तव्यमित्यर्थः । **तदपि** कर्मण एव कार्यत्वं कामस्य तदभाव इत्येतदपि । **कर्मकामकरणाकरणयोः** कर्मकरणकामाकरणयोः । **प्रत्यवायभावाभावयोः** कर्माकरणे प्रत्यवायभावात् कामाकरणे प्रत्यवायाभावादिति हेत्वोरित्यर्थः ।।

